# कृष्णकर्णामृतम्[1]

Version 0.1

## लीलाशुकबिल्वमङ्गलैरचितम्

April 10, 2001

[1]Based on the text edited by Bimanbihari Mazumdar. (Calcutta: Jijnasa, 1966))

चिन्तामणिर्जयति सोमगिरिर्गुरुर्मे
शिक्षागुरुश्च भगवान् शिखिपिञ्छमौलिः ।
यत्पादकल्पतरुपल्लवशेखरेषु
लीलास्वयंवररसं लभते जयश्रीः ॥१ ॥
(वसन्ततिलक)

अस्ति स्वस्तरुणीकराग्रविगलत्कल्पप्रसूनाप्लुतं
वस्तु प्रस्तुतवेणुनादलहरीनिर्वाणनिर्व्याकुलम् ।
स्रस्तस्रस्तनिरुद्धनीविविलसद्गोपीसहस्रावृतं
हस्तन्यस्तनतापवर्गमखिलोदारं किशोराकृति ॥२ ॥
(शार्दूलविक्रीडित)

चातुर्यैकनिदानसीमचपलापाङ्गच्छटामन्थरं
लावण्यामृतवीचिलोलितदृशं लक्ष्मीकटाक्षादृतम् ।
कालिन्दीपुलिनाङ्गनप्रणयिनं कामावताराङ्कुरं
बालं नीलममी वयं मधुरिमस्वाराज्यमाराध्नुमः ॥३ ॥
(शार्दूलविक्रीडित)

बर्होत्तंसविलासकुन्तलभरं माधुर्यमग्नाननं
प्रोन्मीलन्नवयौवनं प्रविलसद्वेणुप्रणादामृतम् ।
आपीनस्तनकुट्मलाभिरभितो गोपीभिराराधितं
ज्योतिश्चेतसि नश्चकास्तु जगतामेकाभिरामाद्भुतम् ॥४ ॥
(शार्दूलविक्रीडित)

मधुरतरस्मितामृतविमुग्धमुखाम्बुरुहं
मदशिखिपिञ्छितमनोज्ञकचप्रचयम् ।
विषयविषामिषग्रसनगृध्नुनि चेतसि मे
विपुलविलोचनं किमपि धाम चकास्तु चिरम् ॥५ ॥
(कोकिलक)

मुकुलायमाननयनाम्बुजं विभो
मुरलीनिनादमकरन्दनिर्भरम् ।

मुकुरायमाणमृदुगण्डमण्डलं
मुखपङ्कजं मनसि मे विजृम्भताम् ॥ ६ ॥
(मञ्जुभाषिणी)

कमनीयकिशोरमुग्धमूर्तेः
कलवेणुक्वणितादृताननेन्दोः ।
मम वाचि विजृम्भतां मुरारे-
र्मधुरिमः कणिकापि कापि कापि ॥ ७ ॥
(औपच्छन्दसिक)

मदशिखण्डिशिखण्दविभूषणं
मदनमन्थरमुग्धमुखाम्बुजम् ।
व्रजवधूनयनाञ्जनरञ्जितं
विजयतां मम वाङ्मयजीवितम् ॥ ८ ॥
(द्रुतविलम्बित)

पल्लवारुणपाणिपङ्कजसङ्गिवेणुरवाकुलं
फुल्लपाटलपाटलीपरिवादिपादसरोरुहम् ।
उल्लसन्मधुराधरद्युतिमञ्जरीसरसाननं
वल्लवीकुचकुम्भकुङ्कुमपङ्किलं प्रभुमाश्रये ॥ ९ ॥
(चेच्चरी)

अपाङ्गरेखाभिरभङ्गुराभि
रनङ्गरेखारसरञ्जिताभिः ।
अनुक्षणं वल्लवसुन्दरीभि
रभ्यस्यमानं विभुमाश्रयामः ॥ १० ॥
(उपजाति)

हृदये मम हृद्यविभ्रमाणां
हृदयं हर्षविशाललोलनेत्रम् ।
तरुणं व्रजबालसुन्दरीणां
तरलं किञ्चन धाम संनिधत्ताम् ॥ ११ ॥

(औपच्छन्दसिक)

निखिलभुवनलक्ष्मीनित्यलीलास्पदाभ्यां
कमलविपिनवीथीगर्वसर्वंकषाभ्याम् ।
प्रणमदभयदानप्रौढिगाढादृताभ्यां
किमपि वहतु चेतः कृष्णपादाम्बुजाभ्याम् ॥ १२ ॥
(मालिनी)

प्रणयपरिणताभ्यां श्रीभरालम्बनाभ्यां
प्रतिपदललिताभ्यां प्रत्यहं नूतनाभ्याम् ।
प्रतिमुहुरधिकाभ्यां प्रस्फुरल्लोचनाभ्यां
प्रवहतु हृदये नः प्राणनाथः किशोरः ॥ १३ ॥
(मालिनी)

माधुर्यवारिधिमदाम्बुतरङ्गभङ्गी-
शृङ्गारसङ्कुलितशीतकिशोरवेषम् ।
आमन्दहासललिताननचन्द्रबिम्ब-
मानन्दसम्प्लवमनु प्लवतां मनो मे ॥ १४ ॥
(वसन्ततिलक)

अव्याजमञ्जुलमुखाम्बुजमुग्धभावै-
रास्वाद्यमाननिजवेणुविनोदनादम् ।
आक्रीडतामरुणपादसरोरुहाभ्या-
मार्द्रे मदीयहृदये भुवनार्द्रमोजः ॥ १५ ॥
(वसन्ततिलक)

मणिनूपुरवाचालं
वन्दे तच्चरणं विभोः ।
ललितानि यदीयानि
लक्ष्माणि व्रजवीथिषु ॥ १६ ॥
(अनुष्टुप्)

मम चेतसि स्फुरतु वल्लवीविभो-
र्मणिनूपुरप्रणयि मञ्जु शिञ्जितम् ।
कमलावनेचरकलिन्दकन्यका-
कलहंसकण्ठकलकूजितादृतम् ॥ १७ ॥

तरुणारुणकरुणामयविपुलायतनयनं
कमलाकुचकलशीभरविपुलीकृतपुलकम् ।
मुरलीरवतरलीकृतमुनिमानसनलिनं
मम खेलतु मदचेतसिमधुराधरममृतम् ॥ १८ ॥
(ललितगति)

आमुग्धमर्धनयनाम्बुजचुम्ब्यमान-
हर्षाकुलव्रजवधूमधुराननेन्दोः ।
आरब्धवेणुरवमात्तकिशोरमूर्ते-
राविर्भवन्तु मम चेतसि केऽपि भावाः ॥ १९ ॥
(वसन्ततिलक)

कलक्कणितकङ्कणं करनिरुद्धपीताम्बरं
क्रमप्रसृतकुन्तलं गलितबर्हभूषं विभोः ।
पुनः प्रकृतिचापलं प्रणयिनीभुजायन्त्रितं
मम स्फुरतु मानसे मदनकेलिशय्योत्थितम् ॥ २० ॥
(पृथ्वी)

स्तोकस्तोकनिरुध्यमानमृदुलप्रस्यन्दिमन्दस्मितं
प्रेमोद्भेदनिरर्गलप्रसृमरप्रव्यक्तरोमोद्गमम् ।
श्रोतुं श्रोत्रमनोहरं व्रजवधूलीलामिथो जल्पितं
मिथ्यास्वापमुपास्महे भगवतः क्रीडानिमीलद्दृशः ॥ २१ ॥
(शार्दूलविक्रीडितम्)

विचित्रपत्राङ्कुरशालि बाला-
स्तनान्तरं याम वनान्तरं वा ।
अपास्य वृन्दावनपादलास्य-

मुपास्यमन्यं न विलोकयाम ॥ २२ ॥
(उपेन्द्रवज्रा)

सार्धं समृद्धैरमृतायमानै-
रातायमानैर्मुरलीनिनादैः ।
मूर्धाभिषिक्तं मधुराकृतीनां
बालं कदा नाम विलोकयिष्ये ॥ २३ ॥
(इन्द्रवज्रा)

शिशिरीकुरुते कदा नु नः
शिखरपिच्छाभरणः शिशुर्दृशोः ।
युगलं विगलन्मधुद्रव-
स्मितमुद्रामृदुना मुखेन्दुना ॥ २४ ॥
(वैतालीय)

कारुण्यकर्बुरकटाक्षनिरीक्षणेन
तारुण्यसंवलितशैशववैभवेन ।
आपुष्णता भुवनमद्भुतविभ्रमेण
श्रीकृष्णचन्द्र शिशिरीकुरु लोचनं मे ॥ २५ ॥
(वसन्ततिलक)

कदा वा कालिन्दीकुवलयदलश्यामतरलाः
कटाक्षा लक्ष्यन्ते किमपि करुणावीचिनिचिताः ।
कदा वा कन्दर्पप्रतिभटजटाचन्द्रशिशिराः
कमप्यन्तस्तोषं दधति मुरलीकेलिनिनदाः ॥ २६ ॥
(शिखरिणी)

अधीरमालोकितमार्द्रजल्पितं
गतं च गम्भीरविलासमन्थरम् ।
अमन्दमालिङ्गितमाकुलोन्मद-
स्मितं च ते नाथ विदन्ति गोपिकाः ॥ २७ ॥
(वंशस्थविल)

अस्तोकस्मितभरमायतायताक्षं
निःशेषस्तनमृदितं व्रजाङ्गनाभिः ।
निःसीमस्तवकितनीलकान्तिधारं
दृश्यासं त्रिभुवनसुन्दरं महस्ते ॥ २८ ॥
(प्रहर्षिणी)

मयि प्रसादं मधुरैः कटाक्षै-
र्वंशीनिनादानुचरैर्विधेहि ।
त्वयि प्रसन्ने किमिहापरैर्न-
स्त्वय्यप्रसन्ने किमिहापरैर्नः ॥ २९ ॥
(उपेन्द्रवज्रा)

निबद्धमुग्धाञ्जलिरेष याचे
नीरन्ध्रदैन्योन्नतमुक्तकण्ठम् ।
दयाम्बुधे देव भवत्कटाक्ष-
दाक्षिण्यलेशेन सकृन् निषिञ्च ॥ ३० ॥
(उपेन्द्रवज्रा)

पिच्छावतंसरचनोचितकेशपाशे
पीनस्तनीनयनपङ्कजपूजनीये ।
चन्द्रारविन्दविजयोद्यतवक्त्रबिम्बे
चापल्यमेति नयनं तव शैशवे नः ॥ ३१ ॥
(वसन्ततिलक)

त्वच्छैशवं त्रिभुवनाद्भुतमित्यवैहि
मच्चापलं च तव वा मम वाधिगम्यम् ।
तत् किं करोमि विरलं मुरलीविलासि
मुग्धं मुखाम्बुजमुदीक्षितुमीक्षणाभ्याम् ॥ ३२ ॥
(वसन्ततिलक)

पर्याचितामृतरसानि पदार्थभङ्गी-
वल्गूनि वल्गितविशालविलोचनानि ।

बाल्याधिकानि मदबल्लवभाविनीभि-
र्भावे लुठन्ति सुकृतां तव जल्पितानि ॥ ३३ ॥
(वसन्ततिलक)

पुनः प्रसन्नेन्दुमुखेन तेजसा
पुरोऽवतीर्णस्य कृपामहाम्बुधेः ।
तदेव लीलामुरलीरवामृतं
समाधिविघ्नाय कदा नु मे भवेत् ॥ ३४ ॥
(वंशस्थविल)

बालेन मुग्धचपलेन विलोकितेन
मन्मानसे किमपि चापलमुद्वहन्तम् ।
लोलेन लोचनरसायनमीक्षणेन
लीलाकिशोरमुपगूहितुमुत्सुकाः स्मः ॥ ३५ ॥
(वसन्ततिलक)

अधीरबिम्बाधरविभ्रमेण
हर्षार्द्रवेणुस्वरसम्पदा च ।
अनेन केनापि मनोहरेण
हा हन्त हा हन्त मनो दुनोषि ॥ ३६ ॥
(उपेन्द्रवज्रा)

यावन् न मे निखिलमर्मदृढाभिघातं
निःसन्धिबन्धनमुपैति न कोऽपि तापः ।
तावद्विभो भवतु तावकवक्त्रचन्द्र-
चन्द्रातपद्विगुणिता मम चित्तधारा ॥ ३७ ॥
(वसन्ततिलक)

यावन् न मे नरदशा दशमी कुतोऽपि
रन्ध्रादुपैति तिमिरीकृतसर्वभावा ।
लावण्यकेलिसदनं तव तावदेव
लक्ष्यासमुत्क्वणितवेणुमुखेन्दुबिम्बम् ॥ ३८ ॥

(वसन्ततिलक)

आलोललोचनविलोकितकेलिधारा-
नीराजिताग्रचरणैः करुणाम्बुराशेः ।
आर्द्राणि वेणुनिनदैः प्रतिनादपूरै-
राकर्णयामि मणिनूपुरशिञ्जितानि ॥ ३९ ॥
(वसन्ततिलक)

हे देव हे दयित हे भुवनैकबन्धो
हे कृष्ण हे चपल हे करुणैकसिन्धो
हे नाथ हे रमण हे नयनाभिराम
हा हा कदा नु भवितासि पदं दृशोर्मे ॥ ४० ॥
(वसन्ततिलक)

अमून्यधन्यानि दिनान्तराणि
हरे त्वदालोकनमन्तरेण ।
अनाथबन्धो करुणैकसिन्धो
हा हन्त हा हन्त कथं नयामि ॥ ४१ ॥
(उपेन्द्रवज्रा)

किमिह कृणुमः कस्य ब्रूमः कृतं कृतमाशया
कथयत कथामन्यां धन्यामहो हृदयेशयः
मधुरमधुरस्मेराकारे मनोनयनोत्सवे
कृपणकृपणा कृष्णे तृष्णा चिरं बत लम्बते ॥ ४२ ॥
(हरिणी)

आभ्यां विलोचनाभ्यामम्बुरुहविलोचनं बालम् ।
द्वाभ्यामपि परिरब्धुं दूरे मम हन्त दैवसामग्री ॥ ४३ ॥
(आर्या)

अश्रान्तस्मितमरुणारुणाधरोष्ठं
हर्षार्द्रद्विगुणमनोज्ञवेणुगीतम् ।

विभ्राम्यद्विपुलविलोचनार्धमुग्धं
वीक्षिष्ये तव वदनाम्बुजं कदा नु ॥ ४४ ॥
(प्रहर्षिणी)

लीलायताभ्यां रसशीतलाभ्यां
नीलारुणाभ्यां नयनाम्बुजाभ्याम् ।
आलोकयेदद्भुतविभ्रमाभ्यां
काले कदा कारुणिकः किशोरः ॥ ४५ ॥
(इन्द्रवज्रा)

बहलचिकुरभारं बद्धपिच्छावतंसं
चपलचपलनेत्रं चारुबिम्बाधरोष्ठम् ।
मधुरमृदुलहासं मन्दरोदारलीलं
मृगयति नयनं मे मुग्धवेषं मुरारेः ॥ ४६ ॥
(मालिनी)

बहलझलदच्छायाचौरं विलासभरालसं
मदशिखिरशिखालीलोत्तंसं मनोज्ञमुखाम्बुजम् ।
कमपि कमलापाङ्गोदग्रप्रसङ्गजडं जग-
न्मधुरिमपरीपाकोद्रेकं वयं मृगयामहे ॥ ४७ ॥
(हरिणी)

परामृश्यं दूरे पथि पथि मुनीनां व्रजवधू-
दृशा दृश्यं शश्वत् त्रिभुवनमनोहारिवदनम् ।
अनामृश्यं वाचामनिशमुदयानामपि कदा
दरीदृश्ये देवं दरदलितनीलोत्पलरुचिम् ॥ ४८ ॥
(शिखरिणी)

लीलाननाम्बुजमधीरमुदीक्षमाणं
नर्माणि वेणुविवरेषु निवेशयन्तम् ।
दोलायमाननयनं नयनाभिरामं
देवं कदा नु दयितं व्यतिलोकयिष्ये ॥ ४९ ॥

(वसन्ततिलक)

लग्नं मुहुर्मनसि लम्पटसम्प्रदाय-
लेखावलेहिनि रसज्ञमनोज्ञवेषम् ।
रज्यन्मृदुस्मितमृदूल्लसिताधरांशु-
राकेन्दुलालितमुखेन्दु मुकुन्दबाल्यम् ॥ ५० ॥
(वसन्ततिलक)

अहिमकरकरनिकरमृदुमुदितलक्ष्मी-
सरसतरसरसिरुहसदृशदृशि देवे ।
व्रजयुवतिरतिकलहविजयनिजलीला-
मदमुदितवदनशशिमधुरिमणि लीये ॥ ५१ ॥
(शशिकला वरिअन्त्)

करकमलदलकलितललितरवंशी
कलनिनदगलदमृतघनसरसि देवे ।
सहजरसभरभरितदरहसितवीथी-
सततवहदधरमणिमधुरिमणि लीये ॥ ५२ ॥
(शशिकला वरिअन्त्)

कुसुमशरशरसमरकुपितमदगोपी-
कुचकलसघुसृणरसलसदुरसि देवे ।
मदमुदितमृदुहसितमुषितशशिशोभा-
मुहुरधिकमुखकमलमधुरिमणि लीये ॥ ५३ ॥
(शशिकला वरिअन्त्)

आनम्रामसितभ्रुवोरुपचितामक्षीणपक्ष्माङ्कुरे
ष्वालोलामनुरागिणोर्नयनयोरार्द्रां मृदौ जल्पिते ।
आताम्रामधरामृते मदकलामम्लान वंशीस्वने-
ष्वाशास्ते मम लोचनं व्रजशिशोर्मूर्तिं जगन्मोहिनीम् ॥ ५४
॥
(शार्दूलविक्रीडित)

तत् कैशोरं तच् च वक्त्रारविन्दं
तत् कारुण्यं ते च लीलाकटाक्षाः ।
तत् सौन्दर्यं सा च सान्द्रस्मितश्रीः
सत्यं सत्यं दुर्लभं दैवतेऽपि ॥ ५५ ॥
(शालिनी)

विश्वोपप्लवशमनैकबद्धदीक्षं
विश्वासस्तवकितचेतसं जनानाम् ।
प्रश्यामप्रतिनवकान्तिकन्दलार्द्रं
पश्यामः पथि पथि शैशवं मुरारेः ॥ ५६ ॥
(प्रहर्षिणी)

मौलिश्चन्द्रकभूषणो मरकतस्तम्भाभिरामं वपु-
र्वक्त्रं चित्रविमुग्धहासमधुरं बाले विलोले दृशौ ।
वाचः शैशवशीतला मदगजश्लाघ्या विलासस्थिति-
र्मन्दं मन्दमये क एष मथुरावीथीं मिथो गाहते ॥ ५७ ॥
(शार्दूलविक्रीडित)

पादौ वादविनिर्जिताम्बुजवनौ पद्मालयालम्बितौ
पाणी वेणुविनोदनप्रणयिनौ पर्याप्तशिल्पश्रियौ ।
बाहू दोहदभाजनं मृगदृशां माधुर्यधाराकिरौ
वक्त्रं वाग्विषयातिलङ्घनमहो बालं किमेतन् महः ॥ ५८ ॥
(शार्दूलविक्रीडित)

एतन् नाम विभूषणं बहुमतं वेषाय शेषैरलं
वक्त्रं द्वित्रिविशेषकान्तिलहरीविन्यासधन्याधरम् ।
शिल्पैरल्पधियामगम्यविभवैः शृङ्गारभङ्गीमयं
चित्रं चित्रमहो विचित्रमहहो चित्रं विचित्रं महः ॥ ५९ ॥
(शार्दूलविक्रीडित)

अग्रे समग्रयति कामपि केलिलक्ष्मी-
मन्यासु दिक्ष्वपि विलोचनमेव साक्षि ।

हा हन्त हस्तपथदूरमहो किमेत-
दाशाकिशोरमयमम्ब जगत्त्रयं मे ॥ ६० ॥
(वसन्ततिलक)

चिकुरं बहुलं विरलं भ्रमरं
मृदुलं वचनं विपुलं नयनम् ।
अधरं मधुरं वदनं ललितं
चपलं चरितं च कदा नु भवे ॥ ६१ ॥
(तोटक)

परिपालय नः कृपालये-
त्यसकृज्जल्पितमार्तबान्धवः ।
मुरलीमृदुलस्वनान्तरे
विभुराकर्णयिता कदा नु नः ॥ ६२ ॥
(वैतालीय)

कदा नु कस्यां नु विपद्दशायां
कैशोरगन्धिः करुणाम्बुधिर्नः ।
विलोचनाभ्यां विपुलायताभ्या-
मालोकयिष्यन् विषयीकरोति ॥ ६३ ॥
(उपेन्द्रवज्रा)

मधुरमधरबिम्बे मञ्जुलं मन्दहासे
शिशिरममृतनादे शीतलं दृष्टिपाते ।
विपुलमरुणनेत्रे विश्रुतं वेणुवादे
मरकतमणिनीलं बालमालोकये नु ॥ ६४ ॥
(मालिनी)

माधुर्यादपि मधुरं
मन्मथता तस्य किमपि कैशोरम् ।
चापल्यादपि चपलं
चेतो बत हरति हन्त किं कुर्मः ॥ ६५ ॥

(आर्या)

वक्षःस्थले च विपुलं नयनोत्पले च
मन्दस्मिते च मृदुलं मदजल्पिते च ।
बिम्बाधरे च मधुरं मुरलीरवे च
बालं विलासनिधिमाकलये कदा नु ॥ ६६ ॥
(वसन्ततिलक)

आर्द्रावलोकितधुरा परिणद्धनेत्र-
माविष्कृतस्मितसुधामधुराधरोष्ठम् ।
आद्यं पुमांसमवतंसितबर्हिबर्ह-
मालोकयन्ति कृतिनः कृतपुण्यपुञ्जाः ॥ ६७ ॥
(वसन्ततिलक)

मारः स्वयं नु मधुरद्युतिमण्डलं नु
माधुर्यमेव नु मनोनयनामृतं नु ।
वेणीमृजो नु मम जीवितवल्लभो नु
बालोऽयमभ्युदयते मम लोचनाय ॥ ६८ ॥
(वसन्ततिलक)

बालोऽयमालोलविलोचनेन
वक्त्रेण चित्रीकृतदिङ्मुखेन ।
वेषेण घोषोचितभूषणेन
मुग्धेन दुग्धे नयनोत्सवं नः ॥ ६९ ॥
(इन्द्रवज्रा)

आन्दोलिताग्रभुजमाकुललोलनेत्र-
मार्द्रस्मितार्द्रवदनाम्बुजचन्द्रबिम्बम् ।
शिञ्जानभूषणचितं शिखिपिञ्छमौलिं
शीतं विलोचनरसायनमभ्युपैति ॥ ७० ॥
(वसन्ततिलक)

पशुपालबालपरिषद्विभूषणः
शिशुरेष शीतलविलोललोचनः ।
मृदुलस्मितार्द्रवदनेन्दुसम्पदा
मदयन्मदीयहृदयं विगाहते ॥ ७१ ॥
(मञ्जुभाषिणी)

किमिदमधरवीथीक्लृप्तवंशीनिनादं
किरति नयनयोर्नः कामपि प्रेमधाराम् ।
तदिदममरवीथीदुर्लभं वल्लभं न-
स्त्रिभुवनकमनीयं दैवतं जीवितं च ॥ ७२ ॥
(मालिनी)

तदिदमुपनतं तमालनीलं
तरलविलोचनतारकाभिरामम् ।
मुदितमुदितवक्त्रचन्द्रबिम्बं
मुखरितवेणुविलासि जीवितं मे ॥ ७३ ॥
(पुष्पिताग्रा)

चापल्यसीम चपलानुभवैकसीम
चातुर्यसीम चतुराननशिल्पसीम ।
सौरभ्यसीम सकलाद्भुतकेलिसीम
सौभाग्यसीम तदिदं व्रजभाग्यसीम ॥ ७४ ॥
(वसन्ततिलक)

माधुर्येण द्विगुणशिशिरं वक्त्रचन्द्रं वहन्ती
वंशीवीथीविगलदमृतस्रोतसा सेचयन्ती ।
मद्वाणीनां विहरणपदं मत्तसौभाग्यभाजां
मत्पुण्यानां परिणतिरहो नेत्रयोः संनिधत्ते ॥ ७५ ॥
(मन्दाक्रान्ता)

तेजसेऽस्तु नमो धेनुपालिने लोकपालिने ।
राधापयोधरोतसङ्गशायिने शेषशायिने ॥ ७६ ॥

(अनुष्टुप्)

धेनुपालदयितास्तनस्थली-
धन्यकुङ्कुमसनाथकान्तये ।
वेणुगीतगतिमूलवेधसे
ब्रह्मराशिमहसे नमो नमः ॥ ७७ ॥
(रथोद्धता)

मृदुक्वणन्नूपुरमन्थरेण
बालेन पादाम्बुजपल्लवेन ।
अनुस्मरन् मञ्जुलवेणुगीत-
मायाति मे जीवितमात्तकेलि ॥ ७८ ॥
(उपेन्द्रवज्रा)

सोऽयं विलासमुरलीनिनदामृतेन
सिञ्चन्नुदञ्चितमिदं मम कर्णयुग्मम् ।
आयाति मे नयनबन्धुरनन्यबन्धो-
रानन्दकन्दलितकेलिकटाक्षलक्ष्मीः ॥ ७९ ॥
(वसन्ततिलक)

दूराद्विलोकयति वारणकेलिगामी
धाराकटाक्षभरितेन विलोकितेन ।
आरादुपैति हृदयङ्गमवेणुनाद
वेणीमुखेन दशनांशुभरेण देवः ॥ ८० ॥
(वसन्ततिलक)

त्रिभुवनसरसाभ्यां दिव्यलीलाकुलाभ्यां
दिशि दिशि तरलाभ्यां दृप्तभूषादराभ्याम् ।
अशरणशरणाभ्यां अद्भुताभ्यां पदाभ्या-
मयमयमनुकूजद्वेणुरायाति देवः ॥ ८१ ॥
(मालिनी)

सोऽयं मुनीन्द्रजनमानसतापहारी
सोऽयं मदव्रजवधूवसनापहारी ।
सोऽयं तृतीयभुवनेश्वरदर्पहारी
सोऽयं मदीयहृदयाम्बुरुहापहारी ॥ ८२ ॥
(वसन्ततिलक)

सर्वज्ञत्वे च मौग्ध्ये च
सार्वभौममिदं महः ।
निर्विशयन् नयनं हन्त
निर्वाणपदमश्नुते ॥ ८३ ॥
(अनुष्टुप्)

पुष्णानमेतत् पुनरुक्तशोभा-
मुष्णेतरांशोरुदयान् मुखेन्दोः ।
तृष्णाम्बुराशिं द्विगुणीकरोति
कृष्णाह्वयं किञ्चन जीवितं मे ॥ ८४ ॥
(इन्द्रवज्रा)

तदेतदाताम्रविलोचनश्री-
सम्भाविताशेषविनम्रगर्वम् ।
मुहुर्मुरारेर्मधुराधरोष्ठं
मुखाम्बुजं चुम्बति मानसं मे ॥ ८५ ॥
(उपेन्द्रवज्रा)

करौ शरदिज्याम्बुजक्रमविलासशिक्षागुरू
पदौ विबुधपादप्रथमपल्लवोल्लङ्घिनौ ।
दृशौ दलितदुर्मदत्रिभुवनोपमानश्रियौ
विलोकय विलोचनामृतमहो महः शैशवम् ॥ ८६ ॥
(पृथ्वी)

आचिन्वानमहन्यहन्यहनि साकारान् विहारक्रमा-
नारुन्धानमरुन्धतीहृदयमप्यार्द्रस्मितार्द्रश्रिया ।

आतन्वानमनन्यजन्मनयनश्लाघ्यामनर्घ्यां दशा-
मानन्दं व्रजसुन्दरीस्तनतटीसाम्राज्यमुज्जृम्भते ॥ ८७ ॥
(शार्दूलविक्रीडित)

तदुच्छ्वसितयौवनं तरलशैशवालङ्कृतं
मदच्छुरितलोचनं मदनमुग्धहासामृतम् ।
प्रतिक्षणविलोभनं प्रणयपीतवंशीमुखं
जगत्त्रयमनोहरं जयति मामकं जीवितम् ॥ ८८ ॥
(पृथ्वी)

चित्रं तदेतच् चरणारविन्दं
चित्रं तदेतन् नयनारविन्दम् ।
चित्रं तदेतद्वदनारविन्दं
चित्रं तदेतद्वपुरस्य चित्रम् ॥ ८९ ॥
(इन्द्रवज्रा)

अखिलभुवनैकभूषण-
मधिभूषितजलधिदुहितृकुचकुम्भम् ।
व्रजयुवतिहारवल्ली-
मरकतनायकमहामणिं वन्दे ॥ ९० ॥
(आर्या)

कान्ताकुचग्रहणविग्रहलब्धलक्ष्मी-
खण्डाङ्गरागलवरञ्जितमञ्जुलश्रीः ।
गण्डस्थलीमुकुरमण्डलखेलमान-
घर्माङ्कुरः किमपि गुम्फति कृष्णदेवः ॥ ९१ ॥
(वसन्ततिलक)

मधुरं मधुरं वपुरस्य विभो-
र्मधुरं मधुरं वदनं मधुरम् ।
मधुगन्धि मृदुस्मितमेतदहो
मधुरं मधुरं मधुरं मधुरम् ॥ ९२ ॥

(तोटक)

शृङ्गाररससर्वस्वं
शिखिपिञ्छविभूषणम् ।
अङ्गीकृतनराकार-
माश्रये भुवनाश्रयम् ॥१३ ॥
(अनुष्टुप्)

नाद्यापि पश्यति कदापि निदर्शनाय
चित्ते तथोपनिषदां सुदृशां सहस्रम् ।
स त्वं चिरान् नयनयोरनयोः पदव्यां
स्वामिन् कया नु कृपया मम संनिधत्से ॥१४ ॥
(वसन्ततिलक)

केयं कान्तिः केशव त्वन्मुखेन्दोः
कोऽयं वेषः कापि वाचामभूमिः ।
सेयं सोऽयं स्वादतामञ्जलिस्ते
भूयो भूयो भूयस्त्वां नमामि ॥१५ ॥
(शालिनी)

वदनेन्दुविनिर्जितः शशी
दशधा देव पदं प्रपद्यते ।
अधिकां श्रियमश्नुतेतरां
तव कारुण्यविजृम्भितं कियत् ॥१६ ॥
(वैतालीय)

तत् त्वन्मुखं कथमिवाम्बुजतुल्यकक्षं
वाचामवाचि ननु पर्वणि पर्वणीन्दोः ।
तत् किं ब्रुवे किमपरं भुवनैककान्त-
वेणु त्वदाननमनेन समं नु यत् स्यात् ॥१७ ॥
(वसन्ततिलक)

शुश्रूषसे शृणु यदि प्रणिधानपूर्वं

पूर्वैरपूर्वकविभिर्न कटाक्षितं यत् ।
नीराजनक्रमधुरां भवदाननेन्दो-
र्निर्व्याजमर्हति चिराय शशिप्रदीपः ॥ ९८ ॥
(वसन्ततिलक)

अखण्डनिर्वाणरसप्रवाहै-
र्विखण्डिताशेषरसान्तराणि ।
अयन्त्रितोद्वान्तसुधार्णवानि
जयन्ति शीतानि तव स्मितानि ॥ ९९ ॥
(उपेन्द्रवज्रा)

कामं सन्तु सहस्रशः कतिपये सारस्यधौरेयकाः
कामं वा कमनीयतापरिमलस्वाराज्यबद्धव्रताः ।
नैवेवं विवदामहे न च वयं देव प्रियं ब्रूमहे
यत् सत्यं रमणीयतापरिणतिस्त्वय्येव पारं गता ॥ १०० ॥
(शार्दूलविक्रीडित)

गलद्व्रीडा लोला मदनविनता गोपवनिता-
मदस्फीतं वीतं किमपि मधुरा चापलधुरा ।
समुज्जृम्भा गुम्फा मधुरिमकिरां मादृशगिरां
त्वयि स्थाने याते दधति चपलं जन्म सफलम् ॥ १०१ ॥
(शिखरिणी)

भुवनं भवनं विलासिनी श्री-
स्तनयस्तामरसासनः स्मरश्च ।
परिचारपरम्पराः सुरेन्द्रा-
स्तदपि त्वच्चरितं विभो विचित्रम् ॥ १०२ ॥
(औपच्छन्दसिक)

देवस्त्रिलोकीसौभाग्य-
कस्तूरीमकराङ्कुरः ।
जीयाद्व्रजाङ्गनानङ्ग-

केलिलालितविभ्रमः ॥ १०३ ॥
(अनुष्टुप्)

प्रेमदं च मे कामदं च मे
वेदनं च मे वैभवं च मे ।
जीवनं च मे जीवितं च मे
दैवतं च मे देव नापरम् ॥ १०४ ॥

माधुर्येण विवर्धन्तां
वाचो नस्तव वैभवे ।
चापल्येन विवर्धन्तां
चिन्ता नस्तव शैशवे ॥ १०५ ॥
(अनुष्टुप्)

यानि तच्चरितामृतानि रसनालेह्यानि धन्यात्मनां
ये वा शैशवचापल्यव्यतिकरा राधावरोधोन्मुखाः ।
या वा भावितवेणुगीतगतयो लीलामुखाम्भोरुहे
धारावाहिकया वहन्तु हृदये तान्येव तान्येव मे ॥ १०६ ॥
(शार्दूलविक्रीडित)

भक्तिस्त्वयि स्थिरतरा भगवन् यदि स्या-
द्दैवेन नः फलति दिव्यकिशोरमूर्तिः ।
मुक्तिः स्वयं मुकुलिताञ्जलिः सेवतेऽस्मान्
धर्मार्थकामगतयः समयप्रतीक्षाः ॥ १०७ ॥
(वसन्ततिलक)

जय जय जय देव देव देव
त्रिभुवनमङ्गलदिव्यनामधेय ।
जय जय जय देव कृष्ण देव
श्रवणमनोनयनामृतावतार ॥ १०८ ॥
(पुष्पिताग्रा)

तुभ्यं निर्भरहर्षवर्षविवशावेशस्फुटाविर्भव-

ह्रियश्चापलभूषितेषु सुकृतां भावेषु निर्भाषिणे ।
श्रीमद्गोकुलमण्डनाय मनसां वाचां च दूरस्फुर-
न्माधुर्यैकमहार्णवाय महसे कस्मैचिदस्मै नमः ॥ १०९ ॥
(शार्दूलविक्रीडित)

ईशानदेवचरणभरणेन नीवी-
दामोदरस्थिरयशःस्तवकोद्भवेन ।
लीलाशुकेन रचितं तव कृष्णदेव
कर्णामृतं वहतु कल्पशतान्तरेऽपि ॥ ११० ॥
(वसन्ततिलक)

धन्यानां सरसानुलापसरणीसौरभ्यमभ्यस्यतां
कर्णानां विवरेषु कामपि सुधावृष्टिं दुहानं मुहुः ।
वन्यानां सुदृशां मनोनयनयोर्मग्नस्य देवस्य नः
कर्णानां वचसां विजृम्भितमहो कृष्णस्य कर्णामृतम् ॥ १११ ॥
(शार्दूलविक्रीडित)

अनुग्रहद्विगुणविशाललोचनै-
रनुस्मरन्मृदुमुरलीरवामृतैः ।
यतो यतः प्रसरति मे विलोचनं
ततस्ततः स्फुरतु तवैव वैभवम् ॥ ११२ ॥
(रुचिरा)

इति श्रीलीलाशुकबिल्वमङ्गलठक्कुरविरचितं श्रीकृष्णकर्णामृतं समाप्तम् ।